च । लुप्शब्देन लुप्सञ्ज्ञया लुप्तप्रत्ययार्थो लक्ष्यत इति बोध्यम् । अधिकरणे किम् । अद्य पुष्यः । असत्यां तदनुवृत्तावन्तरङ्गत्वात्प्रातिपदिकार्थ एव स्यात् । मूलेनेति । 'नक्षत्रेण युक्तः काल' इत्यणो 'लुबविशेषे' इति लुप् । नक्षत्रे किम् । पञ्चालेषु तिष्ठन्ति । जनपदे लुबिति लुप् । सप्तमीपञ्चम्यौ । कालाध्वनोरित्यतस्तदनुवर्त्तते । तच्च पञ्चम्या विपरिणम्यते । मध्यस्यावधिद्वयसापेक्षतया द्विवचनान्तेन समासः । बोधस्तु शक्तित्वेन शक्तिद्वयस्य, न तु द्वित्वेनेति बोद्धव्यम् । ननु कर्तृरूपस्य कारकस्यैकत्वाद्भेदनिबन्धनमध्यव्यपदेशासम्भवोऽत आह । शक्तिद्वयमध्ये याविति । कर्तृत्वादिशक्तिरेव कारकम् । सा च क्रियाभेदेन भिन्नेति भावः । यद्यप्यवध्यवधिमतोस्साजात्यनियमान्न कालाध्वानौ कारकमध्ये सम्भवतस्तथापि शक्तिशब्देन तदाधारकालादिग्रहणान्न दोषः । षष्ठ्यपवादोऽयम् । स्वानन्तरकालवृत्तित्वादिकं विभक्त्यर्थः । शक्तिद्वयमध्य-

---

लुप्शब्दस्याभावबोधकतया नक्षत्रवाचकस्य तत्रावृत्तिरत आह । लुप्शब्देनेति । प्रत्ययार्थः = कालरूपः । अत्राधाराधेयभावसम्बन्धो विभक्त्यर्थः । मूलनक्षत्रयुक्तकालाधारकं देवीकर्मकमावाहनमित्यादिक्रमेण बोधः । अधिकरणे इत्यस्यात्र मण्डूकानुवृत्तिः किमर्थेति शङ्कते । अधिकरणे किमिति । तदननुवृत्तौ सर्वविभक्त्यपवादत्वं स्यादिति केषांचिदुक्तिरयुक्तेति ध्वनयन्नाह । अन्तरङ्गत्वादिति । एवेन मूलं प्रतीक्षते इत्यादौ कर्मादिव्यवच्छेदः । तदिति । कालाध्वनोरित्येतत्पदमित्यर्थः । अत्र पञ्चम्यन्तस्यैव तस्यान्वययोग्यत्वादाह । तच्चेति । बोधस्त्विति । कारकमध्ये इत्यत्र बोध इत्यर्थः । न तु द्वित्वेनेति । वृत्तौ संख्यासामान्याभावादिति भावः । एकत्वादिति । शक्तिमतः कारकत्वात्तस्य चैकत्वादित्यर्थः । क्रियाभेदेनेति । कालभेदेन क्रियाभेद इति भावः । कालवृत्तित्वादिकमिति । आदिना स्वानन्तरदेश-

वर्त्तित्वन्तु वस्तुसन्निमित्तम्। अधिकशब्देनेति। कर्त्तरिक्तप्रत्ययान्ताध्यारूढशब्दार्थकाधिकशब्दयोगे लोकशब्दात् षष्ठ्यां प्राप्तायां ज्ञापकादिमे इष्येते इत्यर्थः। तदस्मिन्नधिकमिति सूत्रे भाष्ये तु उपश्लिष्टपदाध्याहारेणौपश्लेषिकेऽधिकरणे सप्तमीत्युक्तम्। कर्मणि क्तप्रत्ययान्ताध्यारूढशब्दार्थकाधिकयोगे तु अधिको लोको हरिणेति प्रथमैव। उपपरार्द्धे इति। 'उपोधिके चेति' कर्मप्रवचनी-

वृत्तित्वसङ्ग्रहः। अद्य भुक्त्वेत्यादावेतद्दिवसाधिकरणकभोजनोत्तरकालिकमेतद्दिवसानन्तरद्व्यहानन्तरकालिकभोजनाश्रय इति बोधः। द्व्यहे एतद्दिवसानन्तरत्वन्तु समभिव्याहारबललब्धम्। इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येदित्यत्रैतद्देशाधिकरणकस्थित्याश्रयकर्तृकमेतद्देशानन्तरक्रोशानन्तरस्थितलक्ष्यकर्मकं व्यथनमिति बोधः। वस्तुसदिति। न तु तस्य शाब्दबोधविषयत्वमिति भावः। यथा कर्तरि क्तप्रत्ययान्ताध्यारूढशब्दयोगे अध्यारूढो द्रोणः खारीमिति द्वितीया भवति, तथा तादृशाध्यारूढशब्दादधिकमितिसूत्रेण निपातनात्कन्युत्तरपदलोपे च सति निष्पन्नाधिकशब्दयोगेऽपि द्वितीयायां प्राप्तायां ज्ञापकात्पञ्चमीसप्तम्याविति प्राचोक्तं कटाक्षयन्नाह। षष्ठ्यामिति। शेषषष्ठ्यामित्यर्थः। निरूपितत्वं सम्बन्धः। द्वितीयायास्तु नात्र प्राप्तिः। कारकान्वययोग्यतावच्छेदकरूपसाध्यत्वेन तद्धितान्तात् क्रियाया अनुपस्थितेः। ज्ञापकादिति। उक्तसूत्रद्वयनिर्देशरूपादित्यर्थः। अधिकरणसप्तमीत्यत्र क्रियायोगाभावान्न भवतीत्याशयः। वस्तुतोऽत्र ज्ञापनं विनैव सप्तमीति तदंशे मूलमसङ्गतमिति ध्वनयन्नाह। तदस्मिन्निति। पूर्वत्रेष्यत इत्युक्त्याऽन्यत्र तयोरनिष्टं दर्शयति। कर्मणीति। सूत्रे तन्त्रेणोभयोरप्यधिकशब्दयोर्निपातनम्। भाष्यप्रामाण्याच्च कर्त्रर्थकाधिकशब्दयोग एव ज्ञापकात्पञ्चमीसप्तम्यावित्याशयः। प्रथमैवेति। प्रातिपदिकार्थमात्रे प्रथमैवेत्यर्थः। हरिणेत्यत्र तृतीया तु प्रकृत्यादित्वाद्धेताविव्यनेन वेति बोध्यम्। उक्तरीत्या द्वितीयाया इव कर्तृतृतीयाया अप्यधिकशब्दयोगेऽप्राप्तेः।

त्वम्। ननु मामुद्दिश्य विनियोक्ष्यत इत्यर्थादत्र कर्मणि द्वितीयैवेति किङ्कर्मप्रवचनीयत्वेनेत्यत आह। अगतित्वादिति। तिङि चेति। उदात्तवति तिङन्ते गतिर्निहन्यत इत्यर्थः। अत्र 'तिङ्ङतिङ इति' निघातस्य निपातैर्यद्यदीत्यादिना निषेधात् करिष्यतीति तिङन्तेस्योदात्तवत्त्वमिति सर्वेष्टसिद्धिः॥

॥ इति सप्तमी ॥

॥ विभक्त्यर्थः समाप्तः ॥

---

स्पष्टं चेदमधिकमितिसूत्रे उद्योते। नन्वत्र तिङन्तस्य तिङतिङ इति निघातात्कथमुदात्तत्वमत आह। अत्रेति। उदात्तत्वमिति। विकरणस्वरेणेति भावः। इति शिवम्॥ ॥ इति सप्तमी ॥

इति श्रीमद्गुरुचरणकमलसेवासजातशेमुषीवशयेन, श्रीमद्विजयनगरमहाराज
संस्कृतकलाशालाव्याकरणप्रधानोपाध्यायेन, व्याकरणशिरोमण्युपाधि-
धारिणा, व्याकरणस्थापकेन, पेर्युपनामक वेङ्कटेश्वर शास्त्रिणा
विरचिते गुरुप्रसादशेषनामके लघुशब्देन्दुशेखर
व्याख्याने कारकप्रकरणम्

॥ समाप्तम् ॥

॥ श्रीः ॥

---

गुरुप्रसादसरिणिं नेमिवृत्त्यानुवर्तिनी।
गुरुप्रसादशेषाख्या चिरं व्याख्या विजृम्भताम्॥

शिरसा प्रणिपत्येयमर्पिता गुरवे मुदा।
ब्रह्मविष्ण्वीशरूपस्य तस्यास्तु परितुष्टये॥

जीयाच्चिरं श्रीविजयरामदन्तीद्रचन्द्रमाः।
आशंसन्ते प्रजा यस्य नवाभ्युदयमीशितुः॥

नेत्रर्तुवसुभूवर्षे शकेऽस्मिन् शालिवाहने।
गुरोः कटाक्षान्नीतेयं पूर्णतां च प्रकाशताम्॥

॥ इति शिवम् ॥

